संस्कृतभारती
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथमावृत्तिः - १९८६ - ५,०००
द्वितीयावृत्तिः - १९९१ - ५,०००
तृतीयावृत्तिः - १९९८ - ५,०००
चतुर्थावृत्तिः - २००० - ५,०००

कला - **नन्दा**

*मुद्रणम्* -
**स्प्यान् प्रिण्ट्**
बसवनगुडि, बेङ्गलूरु - ५६० ००४

**SUGANDHAH** - A collection of short moral stories written by various authors. Publisher - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085. Ph : 6721052 / 6722576

Pages - iv + 28, Price - Rs. 6-00 Fourth Print - March - 2000
Printed at - Span print Basavanagudi Bangalore - 4

# *इदम् अत्र निवेदनम्*

## *(प्रथममुद्रणम्)*

*'सरलया शैल्या उत्तमाः कथाः प्रादेशिकपत्रिकासु प्रादेशिकलिप्या प्रकाशनीयाः, येन सामान्याः अपि संस्कृते आसक्ताः भवेयुः' इति उद्देशेन कर्णाटके विक्रमनाम्न्यां कन्नडसाप्ताहिकपत्रिकायां कथाप्रकाशनम् आरब्धम् । एवं प्रकाशितासु काश्चन अत्र सङ्गृहीताः ।*

*तान् वयं कृतज्ञतापूर्वकं स्मरामः येषां कथाः अस्मिन् सङ्कलने प्रविष्टाः । ते च -*

| | |
|---|---|
| *श्री जि. महाबलेश्वरभट्टः* | *श्रीमती सुभद्रा* |
| *श्री विश्वासः* | *श्रीमती मनोरमा एं. भट्टः* |
| *श्री शङ्करभट्टः* | *कु० निर्मला शास्त्री* |
| *श्रीमती गिरिजाम्बा* | *कु० म. सु. रोहिणी* |

*मुद्रणकार्यं निरूढवतीं प्रमीलापारेखमहोदयां, तत्सहकारिगणं, कलाकारान्, मुद्रकान्, इतरसाहाय्यदातॄन्, प्रथमप्रकाशकं विक्रमसाप्ताहिकसम्पादकं च वयम् अस्मिन् अवसरे कृतज्ञतापूर्वकं स्मरामः । कथासम्पादकं हेगडेकुलाभिदं जनार्दनं चापि सकार्तज्ञ्यं स्मरामो हि ।*

*सौगन्ध्येन सर्वान् गन्धयन् एषः 'सुगन्धः' 'सरलसंस्कृतेन उपनिबद्धाः समकालिककृतयः न सन्ति' इति प्रथां यदि किञ्चित् वा अपसारयितुं शक्नुयात् तर्हि वयं धन्याः ।*

**– प्रकाशकः**

## *(चतुर्थमुद्रणम्)*

*अल्पे एव काले चतुर्थं मुद्रणं प्रचलत् अस्ति । एतत् तु महते सन्तोषाय । मुद्रकान्, अन्यान् सहकारिबन्धून् च कृतज्ञतापूर्वकं स्मरामो हि ।*

**प्रमाथि सं।। फाल्गुनपूर्णिमा** — **– प्रकाशकः**

२०.३.२०००

# विषयसूची

# १. विद्यारण्यः

अस्ति तुङ्गभद्रायाः तीरे कश्चन ग्रामः । तत्र मायणः नाम कश्चित् गृहस्थः निवसति स्म । मायणस्य त्रयः पुत्राः - माधवः सायणः भोगनाथः च इति । त्रयः अपि तेजस्विनः । ग्रामस्य समीपे कश्चन आश्रमः आसीत् । ते तत्र विद्याभ्यासं कुर्वन्ति स्म । माधवः अभ्यासे क्रीडादिषु च अग्रगण्यः । गुरूणां प्रियतमः ।

उषःकालः । माधवः स्वमित्रैः सह स्नानार्थं नदीम् आगतः । सः नद्यां तरति स्म । तदानीं दूरे एकस्याः स्त्रियः चीत्कारः श्रुतः । माधवः - 'किम् इदम् ?' इति चिन्तयन् परितः दृष्टवान् ! पुनः अपि चीत्कारः ! माधवः सद्यः एव तीरम् आगतवान् । चित्कारम् अनुसृत्य धावितवान् च ।

राजमार्गे एका शिबिका । शिबिकां परितः यवनसैनिकाः सन्ति । ते शिबिकावाहकान् भीषयन्ति । शिबिकायाम् एका तरुणी अस्ति । तां तरुणीम् अपहर्तुं ते सैनिकाः प्रयत्नं कुर्वन्ति । सा तरुणी भयात् क्रन्दनं करोति ।

माधवः एतत् सर्वं दृष्टवान् । माधवस्य महान् क्रोधः आगतः । 'यवनाः भारतदेशे स्त्रियः अपमाननं कुर्वन्ति किम् ? यवनानाम् एतादृशम् औद्धत्यं किम् ?' इति आलोचितवान् सः ।

माधवः निरायुधः आसीत् । सः तत् न गणितवान् । सद्यः एव आक्रमणं कृतवान् । यवनानाम् उपरि हस्तप्रहारं कृतवान् । स्त्रियः विमोचनं साधितवान् च ।

एतत् आक्रमणं यवनानाम् अनिरीक्षितम् आसीत् । ते अपि क्रुद्धाः सञ्जाताः । ब्राह्मणबालकं दृष्ट्वा तेषां कोपः प्रवृद्धः । ते सर्वे मिलित्वा बालकस्य उपरि आक्रमणं कृतवन्तः ।

माधवः तु धीरः । समीपे एकः योधः आसीत् । तस्य हस्तात् माधवः

खड्गम् आकृष्टवान् । तेन खड्गेन द्वित्रान् मारितवान् । एतत् दृष्ट्वा इतरे अपि पलायनं कृतवन्तः । तरुणी भयकम्पिता आसीत् । माधवः तां तस्याः गृहं प्रापितवान् । तदनन्तरम् आश्रमं प्रत्यागतवान् ।

युद्धसमये माधवस्य शरीरं क्षतविक्षतम् आसीत् । एतत् दृष्ट्वा गुरुः पृष्टवान् - "किं सञ्जातम् ?" इति । माधवः सर्वं वृत्तान्तं निवेदितवान् ।

तदा तत्रत्याः केचन गुरुं पृष्टवन्तः - "ब्राह्मणः युद्धं कर्तुम् अर्हति किम् ? एतत् धर्मविरुद्धं किल !" इति ।

तदा गुरुः उक्तवान् - "माधवः युक्तम् एव आचरितवान् । पूजार्हाणां रक्षणं करणीयम् एव । अतः माधवः श्रेष्ठं धर्मम् आचरितवान्" इति ।

एषः एव माधवः ततः परं 'विद्यारण्यः' इति प्रसिद्धः । एषः एव विजयनगरं स्थापितवान् । ●

## २. भारद्वाजस्य निःस्पृहता

महर्षिः भारद्वाजःमहान् प्राज्ञः इति भारतीये ऋषिकुले प्रसिद्धः । तस्य सहस्रशः शिष्याः आसन् । तेषु राजकुमाराः, धनिकपुत्राः, दरिद्राः चापि आसन् । किन्तु आश्रमे ते सर्वे समानाः । भारद्वाजः सर्वान् अपि प्रीत्या पालयति स्म ।

भारद्वाजः वृद्धः जातः । एकदा ब्रह्मा तस्य समीपम् आगतवान् । उक्तवान् च - "महर्षे, भवान् इदानीं शतायुः अस्ति । इदानीं भवतः आयुः समाप्तम् । तथापि भवान् लोकोपकारी । अतः भवतः विषये अहं तुष्टः अस्मि । अहम्

इदानीम् एकं वरं ददामि । तेन भवान् पुनः युवकः भविष्यति । पुनः शतवर्षपर्यन्तं जीवतु'' इति ।

ब्रह्मदेवस्य अनुग्रहं श्रुत्वा आश्रमवासिनः आनन्दिताः । पुनः देशविदेशेभ्यः अधिकाधिकाः शिष्याः समागताः । वेदघोषः, उपनिषच्चर्चा, शास्त्रवाक्यार्थः इत्यादयः पुनरपि प्रवृत्ताः । एवं शतं वर्षाणि समाप्तानि ।

पुनः ब्रह्मा आगतवान् । तेजस्वी भारद्वाजः तं नमस्कृतवान् । ब्रह्मा पृष्टवान् - ''भारद्वाज़, मया अधिकम् आयुः दत्तं खलु ? कथं सः कालः भवता यापितः ?'' इति ।

भारद्वाज़ः उक्तवान् - ''देव ! मया पूर्वापेक्षया अधिकाधिकम् अध्ययनं कृतम् । अध्यापनकार्यमपि कुर्वन् अस्मि'' इति ।

तदा ब्रह्मा पृष्टवान् - ''भारद्वाज, अहं पुनः आयुः यौवनं च दास्यामि चेत् शतवर्षपर्यन्तं भवान् किं करिष्यति ?'' इति ।

भारद्वाजः उक्तवान् - ''भगवन् ! पुनः अधिकज्ञानार्थम् अध्ययनं करिष्यामि । पुनः अपि अधिकाधिकशिष्यान् अध्यापयिष्यामि'' इति ।

''किं विवाहः पत्नीपुत्रादयः वा न अपेक्षिताः ? किं सुखं न अभिलषति भवान् ?'' इति पृष्टवान् ब्रह्मा ।

भारद्वाजः उक्तवान् - ''देव ! शिष्याः एव मम पुत्राः । वेदपरम्परां रक्षामि । सर्वत्र ज्ञानज्योतिः प्रज्वालयामि । इतोऽपि अधिकः आनन्दः, परमं सुखं वा किम् अन्यत् स्यात् ?'' इति ।

तदा ब्रह्मा - ''महात्मन्, धन्यः भवान् । कीर्तिमान् भवतु'' इति उक्त्वा प्रतिनिवृत्तः ।

अहो ! भारद्वाजस्य अनुकरणीया निःस्पृहता ! 

## ३. नृपतुङ्गस्य न्यायनिष्ठा

नृपतुङ्गः राष्ट्रकूटवंशे समुत्पन्नः । सः चक्रवर्ती, गुणवान्, न्यायनिष्ठः च । 'न्यायमार्गे राजा, प्रजाः सर्वे समानाः' इति तस्य नीतिः ।

नृपतुङ्गस्य एकः पुत्रः आसीत् । तस्य नाम कृष्णः इति । युवराजः कृष्णः शीघ्रकोपी दुर्गुणी च । कृष्णः जनकं नृपतुङ्गं निन्दति स्म, प्रजाः पीडयति स्म च । सर्वदा दुष्टमित्रैः सह व्यवहरति स्म ।

कृष्णः प्रौढः जातः । कृष्णस्य मनसि दुर्भावनाः एव पूरिताः सन्ति । सः शत्रुपक्षं प्रविष्टवान् । शत्रुराजस्य कन्यां परिणीतवान् । शत्रुभिः वशीकृतः कृष्णः एकदा स्वराज्यस्य उपरि एव आक्रमणं कृतवान् ।

नृपतुङ्गः धीरः शूरश्च । सः स्वयम् एव रणाङ्गणं प्रविष्टवान् । युद्धे कृष्णः पराजितः । कृष्णस्य बन्धनं जातम् ।

न्यायालये विचारणा प्रवृत्ता । जनकः नृपतुङ्गः न्यायाधीशः । पुत्रः कृष्णः अपराधी । 'निर्णयः कथं भवेत् ?' इति सर्वेषां कुतूहलम् । ''सत्यम्, अहम् अपराधी'' इति कृष्णः स्वकीयम् अपराधम् अङ्गीकृतवान् । पश्चात्तापं प्रकटितवान् च । न्यायपीठेन उद्घोषणा कृता - ''कृष्णः स्वराज्यद्रोही । सः अक्षम्यम् अपराधं कृतवान् अस्ति । अतः तस्य मरणदण्डनं युक्तम्'' इति ।

जनाः मूकाः अभवन् । 'एकः एव युवराजः । यदि सः अपि न भवति तर्हि राज्ये अराजकता उत्पद्येत । अतः राजपुत्रः जीवतु' इति जनानाम् इच्छा ।

जनाः नृपतुङ्गं प्रार्थितवन्तः - ''जीवनदानेन कुमारम् अनुगृह्णातु'' इति । नृपः न अङ्गीकरोति । जनाः निर्बन्धं कुर्वन्ति । अन्ते नृपः क्षमादानम् अकरोत् । कृष्णम् उक्तवान् च - ''पुत्र, जनाः भवते पुनर्जन्म दत्तवन्तः । अतः जनानां सेवा भवतः कर्तव्यम्'' इति ।

गच्छति काले कृष्णः प्रजावत्सलः श्रेष्ठः नृपः अभवत् । 

## ४. स्वामिभक्तिः

रामायणस्य कालः । रामः रावणं हतवान् । सीतया सह अयोध्याम् आगतवान् च । रामस्य राज्याभिषेकसमयः । सर्वत्र सन्तोषः । तदानीं सर्वेभ्यः पारितोषिकाणि दत्तानि । भटाः बहवः आसन् । एकैकः अपि पारितोषिकं प्राप्तवान् ।

आञ्जनेयस्य पर्यायः आगतः । आञ्जनेयः रामसमीपम् आगतवान् । रामस्य पार्श्वे सीता आसीत् किल ? सा स्वकीयं कण्ठहारम् आञ्जनेयाय दत्तवती । आञ्जनेयः हारं स्वीकृत्य बहिः गतवान् । एकं वृक्षम् आरुह्य तत्र उपविष्टवान् । कण्ठहारस्य एकं मणिं स्वीकृतवान् । दन्तेन दष्टवान् । तं मणिम् अधः क्षिप्तवान् । अन्यं मणिं स्वीकृतवान् । दन्तेन पुनः दष्टवान् । तं मणिम् अपि अधः क्षिप्तवान् । एवम् एकैकशः मणिम् अधः क्षिप्तवान् ।

तत्र एकः नागरिकः आगतः । नागरिकः एतत् सर्वं दृष्ट्वा आञ्जनेयं पृष्टवान् – ''इदं किं करोति भवान् ?'' इति ।

''मणिपरीक्षां करोमि'' इति उक्तवान् आञ्जनेयः ।

''किम् इति परीक्षां करोति?'' इति पृष्टवान् नागरिकः ।

''श्रीरामः मणिषु अस्ति वा इति परीक्षां करोमि'' इति उक्तवान् आञ्जनेयः ।

''एवं किमर्थम् ?'' इति पृष्टवान् नागरिकः ।

''यत्र श्रीरामः नास्ति तेन मणिना मम किं प्रयोजनम् ? सर्वे मणयः परीक्षिताः । एकस्मिन् मणौ अपि श्रीरामः नास्ति । अतः मणीन् क्षिपामि'' इति उक्तवान् आञ्जनेयः ।

''सर्वत्र रामस्य अन्वेषणं करोति किल भवान् ? भवतः शरीरे श्रीरामः अस्ति किम् ?'' इति पुनः पृष्टवान् नागरिकः ।

''कुतः नास्ति ? पश्यतु तावत्'' इति उक्त्वा आञ्जनेयः स्वस्य उरसः

भेदनं कृतवान् । आञ्जनेयस्य हृदये रामः सीतया सह हसन् अस्ति !

तस्मिन् समये श्रीरामः आविर्भूतः । ''भवतः अभिमानेन तुष्टः अस्मि । चिरं जीवतु'' इति सः आञ्जनेयम् आशिषा अनुगृहीतवान् । ●

## ५. समभावः

एकं वनम् । तत्र कश्चित् ऋषिः । तस्य अनेके शिष्याः । कदाचित् ऋषिः एवम् उपदेशं कृतवान् - ''सर्वप्राणिषु अपि भगवान् अस्ति । पशु-पक्षि-मानवाः सर्वे भगवत्स्वरूपाः । अतः सर्वेषु आदरः अपेक्षितः । समभावः च अपेक्षितः'' इति ।

एकदा एकः शिष्यः कार्यार्थम् आश्रमतः बहिः गतवान् । तदा कश्चन कोलाहलः श्रुतः - ''सर्वे धावन्तु ! कश्चन मदोन्मत्तः गजः आगच्छन् अस्ति । शीघ्रम्, शीघ्रम् !'' इति ।

सर्वे इतस्ततः धावितवन्तः । किन्तु सः शिष्यः तत्रैव स्थितवान् । सः एवं चिन्तितवान् - 'गजः अपि भगवत्स्वरूपः । अतः किमर्थं भयम् ? किमर्थं धावनम् ?' इति ।

तदा दूरे गजः दृष्टः । तस्य उपरि हस्तिपकः आसीत् । हस्तिपकः शिष्यं दृष्ट्वा पुनः उच्चैः उक्तवान् - ''शीघ्रं धावतु, शीघ्रम् ...'' इति । तथापि शिष्यः न धावितवान् । तत्र एव स्थितवान् । तदा गजः शुण्डया शिष्यं गृहीत्वा दूरे क्षिप्तवान् । शिष्यस्य शरीरं व्रणमयं जातम् । शिष्यः प्रज्ञाशून्यः सञ्जातः । अनन्तरम् अन्यशिष्याः तम् आश्रमं नीतवन्तः । उपचारम् अपि कृतवन्तः ।

गुरुः शिष्यं पृष्टवान् - ''वत्स ! गजं दृष्ट्वा अपि किमर्थं तत्रैव स्थितवान् भवान् ?'' इति ।

शिष्यः उक्तवान् - ''आचार्य ! गजः अपि भगवत्स्वरूपः किल ? अतः भयं नास्ति इति अहं चिन्तितवान्'' इति ।

तदा गुरुः पृष्टवान् - ''एवं वा ? तर्हि हस्तिपकः अपि भगवत्स्वरूपः किल ? तस्य वचनं किमर्थं न लक्षितम् ?'' इति ।

''आचार्य ! भगवत्स्वरूपेषु किमर्थम् एषः भेदभावः ? एकः शुभम् उपदिशति, अन्यः मारयति । एवं क्रिमर्थम् ?'' इति कुतूहलेन पृष्टवान् शिष्यः ।

तदा गुरुः - ''वत्स ! लोके सर्वं जलं 'गङ्गा' इति पूज्यम् अस्ति । तथापि यथा नदीजलं पानयोग्यं तथा समुद्रजलं किं पानयोग्यम् ?'' इति प्रतिप्रश्नं कृतवान् ।

''न हि आचार्य ! समुद्रजलं न पानयोग्यम्'' इति उत्तरं दत्तवान् शिष्यः ।

''एवम् एव सर्वे भगवत्स्वरूपाः । तेषु भेदभावः मास्तु । किन्तु अत्र साधुः, भक्तः, अभक्तः इति भेदः तु अस्ति एव'' इति उपदिष्टवान् गुरुः ।

भिन्नेषु अपि समभावः आवश्यकः । इदं सज्जनलक्षणम् । ●

## ६. परीक्षा

नागार्जुनः कश्चित् रसायनशास्त्रज्ञः, प्रसिद्धः चिकित्सकः चापि । देशविदेशेषु तस्य कीर्तिः प्रसृता आसीत् । सः प्रयोगशालायाम् अहोरात्रं कार्यं करोति स्म । सः बहूनां रोगाणाम् औषधम् अन्विष्टवान् ।

एकदा नागार्जुनः महाराजम् उक्तवान् - ''महाराज ! कार्यं बहु अस्ति । सर्वं कर्तुम् अहम् असमर्थः । मम एकः सहायकः आवश्यकः'' इति ।

राजा अङ्गीकृतवान् । ''भवतु, अहं व्यवस्थां करिष्यामि । श्वः योग्याः युवकाः आगमिष्यन्ति । परीक्षां कृत्वा योग्यम् एकं स्वीकरोतु'' इति उक्तवान् च ।

अपरस्मिन् दिने द्वौ युवकौ आगतौ । नागार्जुनः तयोः विद्याभ्यासविषये पृष्टवान् । विद्याभ्यासः उभयोः अपि समानः । नागार्जुनः उभाभ्याम् अपि एकैकं वस्तु दत्त्वा प्रत्येकम् उक्तवान् - ''इदं वस्तु गृहं नयतु । अनेन एकं रसायनं निर्माय आनयतु । श्वः पुनः मां पश्यतु । गमनसमये राजमार्गेण एव गच्छतु'' इति ।

'श्वः नागार्जुनः माम् एव स्वीकरिष्यति' इति उभयोः अपि विश्वासः । अपरस्मिन् दिने उभौ अपि आगतवन्तौ । एकः सन्तोषेण अस्ति । सः वदति - ''अहं रसायनं सज्जीकृत्य आनीतवान्, पश्यतु'' इति ।

द्वितीयस्य मुखं म्लानम् । नागार्जुनः द्वितीयं पृष्टवान् - ''भवतः मुखं किमर्थं म्लानम् ? रसायनं न कृतं वा ?'' इति ।

''न'' इति उत्तरं दत्तवान् द्वितीयः ।

''किमर्थम् ?'' इति तं पृष्टवान् नागार्जुनः ।

''राजमार्गेण अहं गच्छन् आसम् । तत्र एकः वृद्धः रोगी दृष्टः । तस्य परिस्थितिः शोचनीया आसीत् । अहं तं चिकित्सालयं नीतवान् । तस्य सेवां

कृतवान् । अतः रसायननिर्माणार्थं समयः एव न लब्धः'' इति उक्तवान् द्वितीयः ।

नागार्जुनः द्वितीयम् एव सहायकत्वेन स्वीकृतवान् । राजा एतं वृत्तान्तं ज्ञातवान् । तस्य आश्चर्यं जातम् । राजा नागार्जुनं पृष्टवान् - ''प्रथमः रसायनं कृत्वा आनीतवान् । द्वितीयः तथा न कृतवान् । तथापि भवान् द्वितीयम् एव स्वीकृतवान् । किमर्थम् ?'' इति ।

तदा नागार्जुनः उक्तवान् - ''द्वितीयः अपि रसायनं कर्तुं सम्यक् जानाति । किन्तु तेन समयावकाशः न लब्धः । सः सेवायां निरतः आसीत् । तं रोगिणम् अहं पूर्वमेव तत्र दृष्टवान् । अतः राजमार्गेण गन्तव्यम् इति उक्तवान् । प्रथमः रोगिणं दृष्टवान् । तथापि गतवान् । सः यन्त्रवत् कार्यं करोति । तस्य सेवाभावना नास्ति । सेवाभावनां विना चिकित्सकः कथं भवेत् ? कथं मम सहायकः भवेत् ? अतः अहं द्वितीयम् एव स्वीकृतवान्'' इति । ●

## ७. मैत्री

पाटलीपुत्रं नाम नगरम् । तत्र नन्दः नाम राजा आसीत् । नन्दराजस्य मन्त्री अमात्यराक्षसः । कदाचित् नन्दस्य चन्द्रगुप्तमौर्यस्य च युद्धं जातम् । युद्धे नन्दः मृतः । पाटलीपुत्रे चन्द्रगुप्तः राजा सञ्जातः ।

अमात्यराक्षसः नन्दस्य पक्षपाती । अतः अमात्यराक्षसः - 'पाटलीपुत्रं त्यक्त्वा देशान्तरं गन्तव्यम्' इति चिन्तितवान् । चन्दनदासः अमात्यराक्षसस्य मित्रम् । चन्दनदासगृहे स्वपत्नीं पुत्रं च स्थापयित्वा अमात्यराक्षसः देशान्तरं गतवान् ।

चाणक्यः चन्द्रगुप्तस्य गुरुः । चाणक्यः चिन्तितवान् - 'देशभक्तः अमात्यराक्षसः चन्द्रगुप्तस्य मन्त्री भविष्यति चेत् देशस्य हितं भविष्यति' इति । अ ः सः अमात्यराक्षसस्य सङ्ग्रहाय प्रयत्नं कृतवान् ।

एकस्मिन् दिने चाणक्यः चन्दनदासम् आहूतवान् । चन्दनदासः चाणक्यसमीपम् आगतवान् । चाणक्यः पृष्टवान् - ''चन्दनदास ! भवतः गृहे अमात्यराक्षसस्य पत्नी पुत्रः च अस्ति किल ?'' इति ।

चन्दनदासः - ''मम गृहे अमात्यराक्षसस्य पुत्रः पत्नी वा नास्ति ।''

चाणक्यः - ''चन्दनदास ! भवते बहु धनं ददामि । रत्नानि ददामि । अधिकारम् अपि ददामि । सत्यं वदतु । अमात्यराक्षसस्य पत्नीं पुत्रं च समर्पयतु ।''

चन्दनदासः - ''मम गृहे अमात्यराक्षसस्य पत्नी पुत्रः वा नास्ति, नास्ति, नास्ति ।''

चाणक्यः - ''चन्दनदास ! भवान् सत्यं न अङ्गीकरोति चेत् भवन्तं कारागृहे स्थापयामि ।''

चन्दनदासः - ''अस्तु नाम । मम दुःखं नास्ति ।''

चाणक्यः चन्दनदासं कारागृहे स्थापितवान् । एवम् अनेकानि दिनानि गतानि । चाणक्यः आज्ञां कृतवान् - ''चन्दनदासं शूलम् आरोपयन्तु'' इति ।

चन्दनदासः चाणक्यस्य आज्ञां श्रुत्वा उक्तवान् - ''मित्रनिमित्तं प्राणत्यागं करोमि । अतः मम महान् सन्तोषः'' इति ।

अमात्यराक्षसः एतत् सर्वं वृत्तान्तं श्रुतवान् । सः परममित्रस्य जीवरक्षणार्थं चाणक्यं शरणं गतः । चाणक्यः अमात्यराक्षसं मन्त्रिस्थाने नियोजितवान् । चन्दनदासम् उक्तवान् च - ''चन्दनदास ! भवतः मैत्री असाधारणी । अहम् अनया अतीव सन्तुष्टः अस्मि । अतः भवान् वणिजां प्रमुखः भवतु'' इति ।

# ८. विवेकः

पूर्वं कलिङ्गराज्ये सत्यगुप्तः नाम राजा आसीत् । तस्य पुत्रः कमलापीडः । राजपुत्रः एषः बहु अध्ययनं कृतवान् आसीत् । यद्यपि एषः अतीव बुद्धिमान्, किन्तु अहङ्कारी । सः सर्वदा महाराजम् एव उपहसति स्म ।

महाराजः विवेकी । स्वपुत्रस्य दोषं ज्ञात्वा सः बहुधा खेदम् अनुभवति स्म ।

महाराजस्य समीपे विशालं सैन्यम् आसीत् । कदाचित् राजकुमारः सेनाविषये उक्तवान् - ''पितः ! एतत् सैन्यं व्यर्थम् । अस्य सैन्यस्य वर्धने वृथा धनव्ययः । किम् एतेन प्रयोजनम् ?'' इति ।

''पुत्र ! भवान् न जानाति । युद्धकाले सैन्यम् अत्यावश्यकम् । तदर्थं सर्वदा सैनिकानां रक्षणं पोषणं च करणीयम् । तथा कृतं चेदेव सैनिकाः युद्धकाले प्राणापायम् अविगणय्य युद्धं कुर्वन्ति । राज्यस्य रक्षणं कुर्वन्ति'' इति उक्तवान् राजा ।

''युद्धसमये एव धनं दत्तं चेत् यथेष्टं जनाः लभ्यन्ते । अन्नक्षेपणेन यथा काकाः आगच्छन्ति तथा धनदानेन जनाः अहमहमिकया आगच्छन्ति'' इति सगर्वम् उक्तवान् राजकुमारः । राजा तदा तूष्णीं स्थितवान् ।

राजा तद्दिने रात्रौ पुत्रम् एकत्र नीतवान् । तत्र अन्नं स्थापयित्वा पुत्रम् उक्तवान् - ''पुत्र ! इदानीं काकान् आह्वयतु'' इति ।

''रात्रौ कथं वा काकाः आगच्छन्ति ? किं भवान् मूर्खः ?'' इति पृष्टवान् राजकुमारः ।

''पुत्र ! न अहं मूर्खः । भवतः अविवेकस्य निवारणार्थम् अहम् एवं कृतवान् । यथा रात्रौ अन्नदाने कृते अपि काकाः न आगच्छन्ति, तथैव

युद्धकाले धने दत्ते अपि जनाः न लभ्यन्ते । अतः देशरक्षणार्थं सर्वदा सैन्यं रक्षणीयम्'' इति पुत्रम् उपदिष्टवान् राजा ।

पुत्रः स्वकीयम् अविवेकं ज्ञातवान् । महाराजस्य पादयोः नमस्कारं कुर्वन् क्षमां याचितवान् सः । ●

## ९. सहवासः

कश्चित् चोरः आसीत् । एकस्मिन् दिने सः चौर्यार्थं राजभवनं प्रविष्टवान् । तत्र महाराज्ञी शयितवती अस्ति । पार्श्वमञ्चे राजा अपि अस्ति । तयोः परस्परं सम्भाषणं प्रचलति ।

राज्ञी - ''महाराज ! पुत्री विवाहवयस्का इति स्मरति किल भवान् ?''

राजा - ''प्रिये ! स्मरामि तत् । सर्वम् अपि काले सम्भविष्यति । किमर्थम् इदानीं त्वरा ?''

राज्ञी - ''विवाहः युक्ते काले एव भवेत् किल ? तदर्थं शीघ्रं वरान्वेषणं करणीयम् ।''

राजा - ''भद्रे ! चिन्ता मास्तु ! अस्माकं पुत्री सुन्दरी अस्ति । अतः तस्याः कृते वरान्वेषणं न कष्टकरम् ।''

राज्ञी - ''किम् अतीव सुलभम् ? तादृशाः वराः कुत्र सन्ति ?''

राजा - ''नगरस्य समीपे ऋष्याश्रमः अस्ति किल ? तत्र योग्याः ऋषिकुमाराः निवसन्ति । ते विद्यावन्तः, धीमन्तः, सभ्याः च । तेषु कश्चित् योग्यम् ऋषिकुमारम् अन्विष्यामः । पुत्र्याः विवाहं करिष्यामः ।''

राज्ञी - ''तत्र सुन्दराः वराः सन्ति वा ? अहम् अपि द्रष्टुम् इच्छामि । कदा गच्छाम ?''

राजा – ''त्वरा मास्तु, मम इदानीं राजकार्याणि सन्ति । तथापि सद्यः एव गमिष्यामः ।''

चोरः एतत् सर्वं श्रुतवान् । सः चिन्तितवान् – 'अहम् इदानीं चौर्यं न करोमि । ऋष्याश्रमं गच्छामि । ऋषिकुमारः इव आचरामि । राजा आगमिष्यति । मां द्रक्ष्यति । 'मम पुत्र्याः एषः एव वरः भवतु' इति अङ्गीकरिष्यति । भविष्यं कः वा जानाति ? इदानीं चौर्येण किञ्चित् एव धनं लभ्यते । यदि यथाकथञ्चित् राजपुत्र्याः पतिः भविष्यामि, तर्हि समग्रं राज्यम् एव लप्स्यते किल ?' इति ।

चोरः ऋष्याश्रमं गतवान् । तत्र ऋषिकुमारः इव व्यवहारं कृतवान् । आचरणे सहजता भवेत् किल ? तदर्थं चोरः प्रातःकाले उत्तिष्ठति स्म । नदीजले स्नानं करोति स्म । सर्वदा देवध्यानं करोति स्म । पूजनम्, अध्ययनम् इत्यादिकम् अपि करोति स्म । एवम् एव सप्ताहद्वयम् अतीतम् । चोरस्य मनः इदानीम् ऋषिजीवने आसक्तम् ।

एकपक्षानन्तरं राजा आगतवान् । सर्वान् अपि ऋषिकुमारान् परिशीलितवान् । चोरं दृष्ट्वा – 'एषः एव वरः भवतु' इति मनसि निर्णीतवान् । चोरसमीपम् आगत्य प्रार्थितवान् – ''आर्य ! कृपया भवान् मम पुत्र्याः पाणिग्रहणं करोतु'' इति ।

तदानीं चोरः उक्तवान् – ''पूर्वम् अहम् एतदर्थम् एव प्रयत्नं कृतवान् । ऋषिजीवनस्य अनुकरणं कृतवान् । पञ्चदश दिनानि अत्र वासं कृतवान् । इदानीं तु एतेषां सहवासेन सारासारविवेकं प्राप्तवान् । अतः इदानीम् अहं भोगं न इच्छामि'' इति ।

एवम् ऋषिजनानां सहवासेन चोरः अपि ऋषिकुमारः इव निःस्पृहः सञ्जातः । ●

## १०. संस्कारः

कश्चन नृपः । चित्रकलायाम् अतीव प्रीतिः तस्य । सः कलाकारान् सम्मानयति स्म । एकदा कलाकारद्वयम् आगतम् । उभयोः अपि राजभवने चित्रं लेखितुम् इच्छा । एकः उक्तवान् - ''राजन् ! अहं कलाकारः । महाभारतं चित्रेषु निरूपयितुम् इच्छामि । तदर्थं दश वर्षाणि अपेक्षितानि । कृपया अवकाशं कल्पयतु'' इति ।

अपरः उक्तवान् - ''अहं सामान्यः कलाकारः । चित्रे किमपि निरूपयितुम् इच्छामि । चित्रस्य विषयः न निश्चितः । समाप्तेः अवधिः अपि न निश्चितः । भवान् अवकाशं कल्पयति चेत् चित्रं लिखामि'' इति ।

राजा उभयोः अपि अनुमतिं दत्तवान् । द्वितीयः पुनः उक्तवान् - ''चित्रलेखनसमये कोऽपि न पश्येत् । एषः मम नियमः'' इति । राजा तदपि अङ्गीकृतवान् ।

एकः प्रकोष्ठः । परस्परम् अभिमुखं भित्तिद्वयम् अस्ति । एकस्यां भित्तौ महाभारतचित्रकारः चित्रं लिखति । अपरत्र अन्यः चित्रं लिखति । मध्ये जवनिका अस्ति । महाभारतस्य चित्रं सर्वे पश्यन्ति, प्रशंसां कुर्वन्ति । अपरस्य चित्रस्य दर्शनं निषिद्धम् । सः किं करोति इति कोऽपि न जानाति । एवं दश वर्षाणि अतीतानि ।

उद्घाटनस्य दिनम् आगतम् । राजा चित्रदर्शनार्थम् आगतः । प्रथमं सः महाभारतस्य चित्रं दृष्टवान् । अद्भुता कला ! राजा अतीव सन्तुष्टः । द्वितीयः चित्रकारः राजसमीपम् आगतवान् । उक्तवान् च - ''महाराज ! मम चित्रं सिद्धम् । इमां जवनिकाम् अपसारयतु । चित्रं पश्यतु'' इति ।

नृपः तथा कारितवान् । अत्याश्चर्यम् ! द्वितीयः अपि महाभारतस्य चित्रम् एव लिखितवान् अस्ति । उभयोः अपि चित्रयोः भेदः एव न दृश्यते ।

किन्तु द्वितीयस्य चित्रम् अधिकं शोभते । जीवकला अधिकतया दृश्यते ।

राजा आश्चर्यचकितः । सः चित्रकारं पृष्टवान् - ''अत्र किं कारणम् ? चित्रलेखनसमये भवान् किं कृतवान् ?'' इति ।

''राजन् ! अहं चित्रम् एव न लिखितवान्'' इति उक्तवान् चित्रकारः ।

''तर्हि किम् एतत् ?'' इति आश्चर्येण पृष्टवान् राजा ।

''अन्यचित्रकारस्य चित्रस्य प्रतिबिम्बम् । अहं दश वर्षाणि निरन्तरं भित्तेः संस्कारं कृतवान् । तेन भित्तिः दर्पणः इव जाता । तत्र चित्रं प्रतिफलितम् अस्ति, तावदेव'' इति उक्तवान् चित्रकारः ।

राजा तुष्टः अभवत् । उभाभ्याम् अपि पारितोषिकं दत्तवान् ।

अस्माकं मनः अपि भित्तिः इव । तस्य संस्कारः आवश्यकः । तदा तत्र महात्मनाम् आदर्शाः प्रतिफलिताः भवन्ति । ●

## ११. परहितचिन्तनम्

कश्चित् वैश्यः आसीत् । सः वाणिज्यार्थं दूरदेशं गन्तुम् इच्छति स्म । सः स्वकीयवस्तूनि उष्ट्रस्य उपरि आरोपितवान्, प्रयाणाय उद्युक्तः च ।

मार्गमध्ये मरुभूमिः सम्प्राप्ता । वैश्यस्य समीपे आहारः स्वल्पः एव आसीत् । पञ्च दिनानि गतानि । आहारः सर्वः समाप्तः । वैश्यः देवं प्रार्थितवान् - ''भगवन् ! आहारेण अनुगृह्णातु ।''

दश दिनानि अतीतानि । वैश्यः आहारं न प्राप्तवान् । जलम् अपि समाप्तम् । कुत्रापि जलं नास्ति । सर्वत्र अपि सिकताः दृश्यन्ते । उग्रः

सूर्यतापः पीडयति । पुनः वैश्यः दीनः भूत्वा प्रार्थितवान् – "भगवन् ! अन्नं नास्ति, जलम् अपि नास्ति । कृपया अन्नं जलं च प्रयच्छतु ।"

पुनः दिनत्रयं समाप्तम् । अन्नं नास्ति । जलं नास्ति । वैश्यः एकं पदम् अपि चलितुं न शक्तवान् । वैश्यः भगवन्तं दूषितवान् – "भवान् भक्तप्रियः न । भवतः हृदयं कठिनम् । पातुं जलम् अपि न प्रयच्छति भवान्" इति ।

पुनः दिनत्रयम् अतीतम् । वैश्यस्य हस्तयोः पादयोश्च शक्तिः एव नास्ति । वैश्यः पार्श्वे पतति । मन्दं परितः पश्यति । वैश्यस्य वाहनम् उष्ट्रः भूमौ पतितः अस्ति । दीनतया उष्ट्रः परितः पश्यन् अस्ति । उष्ट्रस्य अपि जलापेक्षा !

वैश्यस्य हृदये करुणा उत्पन्ना । वैश्यः चिन्तितवान् – 'एतावत्पर्यन्तम् अहं मम विषये एव चिन्तितवान् । एषः उष्ट्रः मम भारं वहति । मम उपकारं करोति । इदानीम् उष्ट्रः मरणावस्थायाम् अस्ति । उष्ट्रस्य विषये अपि मया चिन्तनीयम्' इति ।

अनन्तरं वैश्यः देवं प्रार्थितवान् – "भगवन्, मम अवस्था अतीव दीना । अहं मरणावस्थायाम् अस्मि । मम उष्ट्रः अपि मरणावस्थायाम् अस्ति । कृपया प्रसीदतु । भवतः अनुग्रहः न भविष्यति चेत् उभयोः मरणं भविष्यति" इति ।

तस्मिन् समये दूरे जलस्य शब्दः श्रुतः । वैश्यः कष्टेन उत्थितवान् । शब्दम् अनुसृत्य गतवान् । उष्ट्रम् अपि नीतवान् । उष्ट्राय जलं दत्तवान् । स्वयं जलं पीतवान् । समीपे फलानि आसन् । तानि सः भक्षितवान् । उष्ट्राय अपि आहारं दत्तवान् ।

केवलं स्वार्थं चिन्तयन्तं पुरुषं भगवान् न अनुगृह्णाति । यः परहितम् अपि चिन्तयति तद्विषये भगवान् शीघ्रं प्रसीदति । ●

# १२. धर्मदृष्टिः

श्रीरामचन्द्रस्य रावणस्य च युद्धं जातम् । रावणः भयङ्करं युद्धं कृतवान् । तदा श्रीरामः ब्रह्मास्त्रं प्रयुक्तवान् । ब्रह्मास्त्रेण रावणः मृतः । अनन्तरं विभीषणः अतीव रोदनं कृतवान् । मन्दोदरी अपि रोदनं कृतवती ।

श्रीरामः विभीषणम् उक्तवान् - ''विभीषण ! रोदनं मास्तु । रावणः वीरस्वर्गं प्राप्तवान् अस्ति । इदानीं शवसंस्कारस्य समयः । तदर्थं सिद्धतां करोतु'' इति ।

''भगवन् ! रावणः मम अग्रजः । इदानीं सः मृतः । अतः अहं रोदनं कृतवान् । किन्तु रावणः पापी, अधार्मिकः, परस्त्रीकामुकः, दुष्टः च । अतः रावणस्य शवसंस्कारं न करोमि । रावणस्य शवस्पर्शम् अपि न करोमि'' इति उक्तवान् विभीषणः ।

''विभीषण ! मरणान्तानि वैराणि । अर्थात् मरणपर्यन्तम् एव वैरं तिष्ठति । मरणानन्तरं वैरम् अनुचितं धर्मविरुद्धं च । इदानीं रावणः मृतः । तस्य सर्वे पुत्राः अपि मृताः । कुम्भकर्णः अपि मृतः । अतः रावणस्य शवसंस्कारः भवता एव करणीयः'' इति उक्तवान् रामः ।

विभीषणः - ''भगवन् ! तथापि रावणः पापी .... ''

''विभीषण ! मरणान्तानि वैराणि । अतः मम अपि रावणस्य विषये वैरं नास्ति । रावणः भवतः यथा सहोदरः तथा मम अपि । यदि शवसंस्कारं भवान् न करोति तर्हि अहम् एव करोमि'' इति गम्भीरस्वरेण उक्तवान् रामः ।

''क्षम्यताम् । अहं शवसंस्कारं करोमि । भगवन् ! भवतः धर्मदृष्टिः असाधारणी'' इति वदन् श्रीरामं नमस्कृतवान् विभीषणः ।

धर्ममूर्तये श्रीरामाय नमः । ●

## १३. कोण्डदेवस्य नियमपालनम्

दादाजी कोण्डदेवः शिवराजस्य मन्त्री गुरुश्च । एषः अतीव न्यायनिष्ठः पुरुषः । स्वविषये अतीव कठोरः । किन्तु अन्येषां विषये अतीव मृदुः ।

एकदा कोण्डदेवः राजोद्यानं प्रति गच्छति स्म । तत्र सर्वे वृक्षाः अपि फलभरिताः आसन् । स्वराज्यविषये चिन्तयन् कोण्डदेवः अजानन् एव एकं फलं स्वीकृतवान् । खादितुम् उद्युक्तः च । तत्क्षणे एव तस्य विवेकः जागरितः । सः चिन्तितवान् - 'किम् अहं कृतवान् ? राजोद्याने स्थितं फलम् अनुमतिं विना अहं खादितवान् । अतः अहं दण्डार्हः' इति । ततः सः राजसभां गतवान् । राजसभायां राजा सर्वे मन्त्रिणश्च आसन् । तत्र कोण्डदेवः पृष्टवान् - ''राजन्, कश्चित् अनुमतिं विना राजसम्पदः उपयोगं करोति चेत् तस्य किं दण्डनम् ?'' इति ।

तदा तत्र उपस्थितेषु एकः उक्तवान् - ''तस्य हस्तच्छेदनं करणीयम्'' इति ।

अन्यः उक्तवान् - ''तस्य शिरश्छेदनं करणीयम्'' इति ।

अन्ते राजा उक्तवान् - ''हस्तच्छेदः एव उचितः दण्डः'' इति ।

''तर्हि मम दक्षिणहस्तं छेदयन्तु'' इति गाम्भीर्येण उक्तवान् कोण्डदेवः ।

''किमर्थम् ?'' इति आश्चर्येण पृष्टवान् राजा ।

''अनुमतिं विना भवतः उद्याने स्थितं फलम् अहं खादितवान् । अतः'' इति उक्तवान् कोण्डदेवः ।

ततः राजा वृत्तान्तं श्रुत्वा उक्तवान् - ''भवान् अजानन् एव अपराधं कृतवान् किल ? तदर्थं दण्डः मास्तु'' इति ।

कोण्डदेवः न अङ्गीकृतवान् । सः उक्तवान् - ''अपराधः अपराधः एव । दण्डः अवश्यं दातव्यः'' इति ।

राजा – ''दण्डः मास्तु'' इत्येव पुनः उक्तवान् ।

अन्ते कोण्डदेवः – ''तर्हि अहम् एव आत्मानं दण्डयामि । अद्य आरभ्य अहं दक्षिणहस्तस्य उपयोगं न करोमि'' इति प्रतिज्ञां कृतवान् । आजीवनं सः तथैव आचरितवान् । ●

## १४. श्रद्धा एव गरीयसी

कश्चित् ऋषिः तपः कर्तुं वनं गच्छति । वने एकः व्याधः ऋषिं पश्यति । व्याधः पृच्छति – ''किमर्थं भवान् अत्र आगतवान् ?'' इति ।

ऋषिः – ''अहम् मृगम् अन्वेष्टुम् अत्र आगतवान् ।''

व्याधः – ''सः कीदृशः मृगः इति वदतु । अहम् अन्विष्य आनयामि ।''

ऋषिः – ''सः मृगः सुलभतया न लभ्यते । तम् अन्वेष्टुं भवान् न शक्नोति ।''

व्याधः – ''न श्रीमन्, अहं तम् अवश्यम् आनेष्यामि । तस्य स्वरूपं किम् इति वदतु ।''

ऋषिः – ''तस्य मृगस्य स्वरूपं विचित्रम् अस्ति । पादतः कण्ठपर्यन्तं तस्य मनुष्याकृतिः, ततः उपरि सिंहाकृतिः, अङ्गुलीषु दीर्घाः नखाः । किन्तु भवान् व्यर्थं प्रयत्नं मा करोतु । भवान् मृगं प्राप्तुं न शक्नोति ।''

व्याधः – ''अहं निश्चयेन वदामि । तं मृगम् अन्विष्य पाशेन बद्ध्वा श्वः प्रातःकाले अत्र आनेष्यामि ।''

व्याधः मृगम् अन्वेष्टुं वने सर्वत्र अटति । सर्वत्र अन्विष्यति । प्रातः-कालपर्यन्तं प्रयत्नं करोति । तथापि मृगः न लभ्यते । तदा सः निराशः चिन्तयति – 'प्रातःकाले मृगं बद्ध्वा आनयामि इति उक्तवान् आसम् । किन्तु

मृगः न लब्धः । इदानीं कथं वा मुखं प्रदर्शयामि ? अतः अत्रैव प्राणान् त्यजामि' इति ।

एवं चिन्तयित्वा सः आत्महत्यार्थम् उद्युक्तः भवति । तदा पृष्ठतः कश्चन शब्दः श्रुतः । व्याधः तत्र पश्यति । अपेक्षितः सः मृगः पृष्ठतः एव अस्ति । व्याधः पाशं क्षिपति । मृगं पाशेन बध्नाति । ऋषिसमीपं नयति ।

सः ऋषिं वदति - ''आर्य ! अहं मृगम् आनीतवान् एव'' इति ।

ऋषिः पश्यति । मृगः एव न दृश्यते । केवलं पाशः दृश्यते । ऋषिः विस्मितः पृच्छति - ''कुत्र अस्ति मृगः ?'' इति ।

''भवतः पुरतः एव अस्ति । किं न पश्यति भवान् ?'' इति पृच्छति व्याधः ।

तदानीं मृगः एव वदति - ''ऋषे ! भवता व्यांधेन च मां द्रष्टुं प्रयत्नः कृतः । किन्तु व्याधस्य मनसि - 'मृगम् अन्विष्यामि एव' इति विश्वासः आसीत् । तस्य श्रद्धा अधिका आसीत् । किन्तु भवतः मनसि - 'अहम् एव भगवन्तं द्रष्टुम् असमर्थः । एवं स्थिते एषः सामान्यः व्याधः कथं वा तं द्रष्टुं शक्नुयात्' इति भावः आसीत् । अतः भवान् मां द्रष्टुम् असमर्थः जातः । तथापि भवान् मयि भक्तिं प्रदर्शितवान् । भवान् अपि इतः परं श्रद्धया तपः आचरतु । तदा मां द्रष्टुम् अर्हति भवान्'' इति ।

एवम् उक्त्वा मृगवेषधारी नृसिंहरूपी श्रीहरिः अन्तर्हितः । ऋषिः व्याधस्य पादयोः नमस्कारं करोति । भगवतः दर्शनार्थं श्रद्धया प्रयत्नं कर्तुम् अन्यत्र गच्छति च । ●

# १५. बुद्धिपरीक्षा

कुसुमपुरं नाम नगरम् । तत्र 'नन्दः' नाम राजा आसीत् । सः नृपः नन्दः अतीव बुद्धिमान् ।

'नन्दस्य बुद्धिपरीक्षा करणीया' इति एकदा तदाश्रितानां राज्ञाम् इच्छा जाता । तदर्थं ते मुद्राङ्किताम् एकां सुवर्णपेटिकां तस्मै प्रेषितवन्तः । पेटिकायाः अन्तः एकः दारुखण्डः आसीत् । एकं पत्रम् अपि तत्र आसीत् । पत्रे एवं लिखितम् आसीत् । - ''अस्य दारुखण्डस्य मूलभागः कः, अग्रभागश्च कः इति सूचनीयम्'' इति ।

अनेके बुद्धिमन्तः आगताः । पत्रे स्थितं प्रश्नं पठितवन्तः । किन्तु उत्तरं न ज्ञातवन्तः ।

चन्दनदासः कश्चन श्रेष्ठः वणिक् । तस्य गृहे 'सुबुद्धिः' इति कश्चित् आसीत् । सः पत्रवृत्तान्तं श्रुतवान्, राजसमीपम् आगतवान् च ।

सुबुद्धिः नन्दम् उक्तवान् - ''महाराज ! अत्र विचारणीयं किम् अस्ति ? तं दारुखण्डं जले निक्षिपतु । यः भागः जले निमज्जति सः मूलभागः, यतः मूले एव भारः भवति । यः भागः जलस्य उपरि प्लवते सः अग्रभागः'' इति ।

अनेन राजा सन्तुष्टः । सः सुबुद्धिम् एव मन्त्रिपदे नियोजितवान् । सः एव सुबुद्धिः एकस्मिन् युद्धे भयं विना घोरं युद्धं कृतवान् । ततः आरभ्य सः अमात्यराक्षसः इति प्रसिद्धः अभवत् । ●

## १६. ज्ञातव्यः आत्मदोषः

कश्चित् मुनिः गङ्गातीरे तपः आचरति स्म । तस्य मनसि एकः विचारः आसीत् - 'वेदाध्ययनं नाम अतीव कष्टकरम् । अध्ययनं विना एव वेदज्ञानं सिध्येत् । तदर्थं तपः करोमि । यथा अध्ययनं विना वेदज्ञानं प्राप्तुं शक्यते तथा करोमि' इति । अतः सः तपः कर्तुं प्रवृत्तः ।

इन्द्रः मुनेः विचारं ज्ञातवान् । मुनेः मनः परिवर्तनीयम् इति निश्चित्य सः वृद्धब्राह्मणरूपेण गङ्गातीरम् आगतवान् । तत्र सः मुष्टौ पुलिनं गृहीत्वा गङ्गाजले प्रक्षेप्तुम् उद्युक्तः अभवत् । मुनिः एतत् दृष्टवान् ।

आश्चर्यचकितः मुनिः पृष्टवान् - ''भोः वृद्ध ! किमर्थं भवान् एवं गङ्गायां पुलिनं प्रक्षिपति ?'' इति ।

वृद्धः - ''भवान् किमर्थं तपः करोति ?''

मुनिः - ''मम उद्देशः महान् अस्ति । प्रपञ्चे इदानीं बहवः जनाः सन्ति । इतः परम् अपि बहवः जनिष्यन्ते च । तैः सर्वैः अध्ययनं विना सर्वे वेदाः ज्ञातव्याः । एतदर्थम् एकः उपायः साधनीयः इति मम आशा ।''

वृद्धः - ''मम आशा एवम् अस्ति - 'एतस्यां गङ्गायाम् एकः गर्तः अस्ति । सः गर्तः पुलिनेन पूरणीयः' इति ।''

मुनिः - ''अयि भोः ! भवतः कार्यं निरर्थकम् । पुलिनेन गङ्गायाः गर्तः पूरयितुं कथं शक्यते ?''

''न शक्यते वा ! मम कार्यं निरर्थकं वा ? तर्हि भवतः कार्यम् अपि निरर्थकम् । यतः अध्ययनं विना काऽपि विद्या न सिध्यति । प्रथमतः अस्मासु विद्यमानः दोषः ज्ञातव्यः । अहम् इन्द्रः अस्मि । भवतः कार्यं व्यर्थम् इति दर्शयितुम् एव आगतवान्'' इति उक्त्वा इन्द्रः गतवान् ।

मुनिः स्वकीयं दोषं ज्ञातवान् । 'अध्ययनपूर्वकं वेदज्ञानं सम्पादयामि' इति चिन्तयित्वा सः वेदाध्ययनम् आरब्धवान् । ●

# १७. देशभक्तिः

१९६५ क्रिस्ताब्दः । रघुबीरसिङ्गः कश्चित् सैनिकः । रघुबीरसिङ्गाय एकं पत्रम् आगतम् । सिङ्गः पत्रं पठितवान् । अनन्तरं रघुबीरसिङ्गः सेनाधिकारिणः समीपं गतवान् ।

सिङ्गः - ''आर्य ! नमस्काराः ।''

अधिकारी - ''भोः सिङ्ग ! आगच्छतु, उपविशतु । भवान् किमर्थम् आगतवान् ?''

सिङ्गः - ''मम विवाहः निश्चितः अस्ति । अतः एकमासपर्यन्तं विरामम् इच्छामि ।''

अधिकारी - ''महान् सन्तोषः । भवतः विवाहः निर्विघ्नं सम्पन्नः भवतु । एकमासपर्यन्तं विरामस्य अनुमतिं ददामि । शुभं भवतु ।''

सिङ्गः - ''अनुगृहीतोऽस्मि ।''

रघुबीरसिङ्गः स्वगृहम् आगतवान् । सिङ्गस्य आगमनेन सर्वेषां सन्तोषः जातः । विवाहार्थं नूतनवस्त्राणि क्रीतानि । विवाहमुहूर्तः अपि निश्चितः । विवाहपत्रिका अपि मुद्रिता । इतः सप्तदिनानन्तरं विवाहः ।

प्रातःकालः । दिनपत्रिका आगता । ''कच्छप्रदेशे पाकिस्थानस्य आक्रमणम्'' इति, ''कार्गिल्प्रदेशे अपि पाकिस्थानस्य आक्रमणम्'' इति च पत्रिकायां वार्ता मुद्रिता अस्ति । रघुबीरसिङ्गः पत्रिकां पठितवान्, तत्क्षणे एव पेटिकायां वस्त्राणि वस्तूनि च स्थापितवान् । अनन्तरं मातापितृसमीपं गतवान् ।

सिङ्गः - ''अम्ब ! भारतस्य उपरि पाकिस्थानस्य आक्रमणं जातम् । अहं युद्धार्थं गच्छामि ।''

अम्बा - ''वत्स ! भवतः विवाहार्थं सर्वं सिद्धम् अस्ति । मुहूर्तः अपि निश्चितः । सप्तदिनानाम् अनन्तरं विवाहः भविष्यति । विवाहानन्तरं गच्छतु ।

इदानीं प्रयाणं मास्तु ।''

सिङ्घः - ''अम्ब ! देशरक्षणम् आद्यं कर्तव्यम् । विलम्बः मास्तु । कृपया आशीर्वादेन अनुगृह्णातु ।''

अम्बा - ''पुत्र ! चिरं जीवतु, विजयी भवतु ।''

रघुबीरः मातापितरौ नमस्कृतवान् । शीघ्रातिशीघ्रं युद्धार्थं प्रयाणं कृतवान् च ।

'स्वदेशरक्षणं प्रधानम् । स्वसुखं गौणम्' इति यः चिन्तयति सः एव देशभक्तः । ●

## १८. वृद्धायाः देशप्रेम

कस्मिंश्चित् ग्रामे काचित् वृद्धा आसीत् । तस्याः चत्वारः पुत्राः आसन् । ते सर्वे श्रमजीविनः शूराः च ।

एकदा तस्य देशस्य उपरि शत्रूणाम् आक्रमणं भवति । तदा देशे सर्वत्र युवकान् सैन्ये प्रवेशयन्ति । वृद्धा ज्येष्ठपुत्रम् आहूय वदति -''पुत्र ! देशरक्षणम् अस्माकं कर्तव्यम् । अस्माकं देशः इदानीं विपत्काले अस्ति । अतः भवान् अपि सैनिकः भवतु । मातृभूमिरक्षणं करोतु'' इति ।

ज्येष्ठपुत्रः सन्तोषेण मातृवचनम् अङ्गीकरोति । रणाङ्गणं गच्छति । शौर्येण युद्धं करोति । वीरस्वर्गं प्राप्नोति ।

वृद्धा पुत्रस्य मरणं शृणोति । किन्तु किञ्चिदपि विचलिता न भवति । द्वितीयं पुत्रं युद्धार्थं प्रेषयति । द्वितीयः अपि युद्धे वीरमरणं प्राप्नोति ।

वृद्धा इदानीम् अपि न खिन्ना । तृतीयं पुत्रम् अपि रणरङ्गं प्रेषयति । तृतीयः अपि रणरङ्गे मृतः भवति । इदानीं वृद्धा चिन्तयति - 'चतुर्थं पुत्रम् अपि रणरङ्गं प्रेषयामि' इति ।

तदानीं तद्ग्रामीणाः आगत्य वदन्ति - ''मातः ! भवती वृद्धा । अन्तिमकाले भवत्याः सेवार्थं कोऽपि नास्ति । अपि च भवत्याः वंशोद्धारार्थम् एषः एकः एव पुत्रः अवशिष्टः । एतम् अपि मृत्युमुखं प्रति मा प्रेषयतु'' इति ।

तदा माता वदति - ''मदीयानां पुत्राणाम् अपेक्षया मम जन्मभूमिः एव श्रेष्ठा । जन्मभूमिरक्षणापेक्षया अन्यत् महाकार्यं नास्ति एव'' इति ।

एवं सा चतुर्थं पुत्रम् अपि रणरङ्गं प्रेषयति । रणरङ्गे घोरं युद्धं प्रवर्तते । अत्र वृद्धायाः तु रात्रौ निद्रा अपि नास्ति । तस्याः एका एव चिन्ता - 'स्वदेशस्य गतिः का भवेत् ?' इति ।

एकस्मिन् दिने प्रातः एकः ग्रामीणः आगत्य दुःखेन वदति - ''मातः ! भवत्याः चतुर्थः पुत्रः अपि मृतः'' इति ।

तदा मातुः नयने अश्रुपूर्णे ।

तदा ग्रामीणः वदति - ''मातः, वयं तु प्रथमम् एव विज्ञापितवन्तः - 'भवती अवशिष्टम् एकमेव पुत्रं मा प्रेषयतु' इति । किन्तु भवती अस्माकं वचनं न श्रुतवती । अधुना च रोदिति'' इति ।

''भोः, मम पुत्रः मृतः इति न रोदिमि । किन्तु अधुना युद्धार्थं प्रेषयितुं मम पञ्चमः पुत्रः नास्ति किल इति रोदिमि । अस्माकं देशस्य का स्थितिः स्यात् इत्येव मम चिन्ता'' इति उक्तवती वृद्धा ।

''तद्विषये चिन्ता मास्तु । भवत्याः पुत्रः पञ्चत्वं गतः । किन्तु देशः रक्षितः । विजयलक्ष्मीः अस्माकं पक्षम् आलिङ्गितवती । वयम् इदानीं विजयशालिनः'' इति उक्तवान् ग्रामीणः । एतत् श्रुत्वा वृद्धा अतीव सन्तुष्टा अभवत् ।

''जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।'' 

## १९. प्राणादपि संस्कृतिः श्रेष्ठा

पूर्वं चक्रवर्ती हर्षः भारते राज्यभारं निर्वहति स्म । तस्मिन् काले 'ह्युयनृत्सांग' इति एकः चीनदेशीयः वीक्षणार्थं भारतम् आगतवान् । सः भारते अनेकेषु स्थलेषु अटितवान् । अत्रत्यजनानां विषये ज्ञातवान् । भारतीयसंस्कृतिम् अधीतवान् । विविधान् धर्मग्रन्थान्, विविधानि ऐतिहासिकवस्तूनि च सङ्गृहीतवान् ।

सः स्वदेशगमनतः पूर्वं हर्षचक्रवर्तिनं दृष्टवान् । तं स्वानुभवं निवेदितवान् । महाराजाय कृतज्ञतां च समर्पितवान् । हर्षः अपि तस्य प्रयाणसौकर्यार्थं 'राजश्री'-नामिकाम् एकां नौकां दत्त्वा तं पुरस्कृतवान् । अपि च रक्षणार्थं विंशतियोधान् प्रेषितवान् ।

प्रयाणारम्भसमये हर्षः योधान् उद्दिश्य एवम् उक्तवान् - ''भोः भटाः ! अस्यां नौकायां विविधाः भारतीयधर्मग्रन्थाः सन्ति । अनेकानि ऐतिहासिकवस्तूनि च सन्ति । एतानि भारतीयसंस्कृतेः प्रतीकानि, अमूल्यानि च । अतः एतेषां ग्रन्थानां यात्रिकाणां च रक्षणं भवतां कर्तव्यम्'' इति ।

प्रयाणम् आरब्धम् । अनेकदिनपर्यन्तं प्रयाणे कोऽपि विघ्नः न समुत्पन्नः । एकस्मिन् दिने समुद्रे अकस्मात् चण्डमारुतः समुत्पन्नः । तेन नौका डोलायमाना सञ्जाता । 'नौका जले मज्जति वा ?' इति शङ्का समुत्पन्ना ।

भीतः प्रधाननाविकः उक्तवान् - ''भोः, नौकायाः भारः अधिकः जातः । झटिति एतानि पुस्तकानि, ऐतिहासिकवस्तूनि च समुद्रे क्षिपन्तु । प्राणान् रक्षन्तु'' इति ।

तदा योधनायकः उक्तवान् - ''योधाः ! एषः अस्माकम् अग्निपरीक्षाकालः ।

धर्मग्रन्थानाम्, ऐतिहासिकवस्तूनां, तद्द्वारा भारतीयसंस्कृतेः च रक्षणं अस्माकम् आद्यं कर्तव्यम् । तदर्थं सर्वे सिद्धाः भवन्तु । प्राणान् समर्प्य अपि कर्तव्यं परिपालनीयम्'' इति ।

नायकस्य वचनं श्रुत्वा योधाः झटिति एकैकशः तृणम् इव स्वशरीरम् एव समुद्रे क्षिप्तवन्तः । संस्कृतेः रक्षणार्थं स्वप्राणान् एव समर्पितवन्तः ।

अत्याश्चर्यकरम् एतत् दृश्यं दृष्टवतः ह्यूयन्त्सांगस्य नेत्रयोः अश्रुबिन्दवः उदिताः । ●

## २०. इदं न मम

कश्चित् राजा आसीत् । सः परिश्रमेण राज्यं पालयति स्म । प्रजानां हितार्थं शतधा प्रयत्नं करोति स्म । तथापि नवीनाः समस्याः उत्पद्यन्ते स्म । अतः राजा श्रान्तः । अन्ते च राजा स्वगुरोः समीपं गतवान् । गुरुः अरण्ये निवसति स्म । गुरोः आश्रमं गत्वा राजा स्वकीयसमस्याः निवेदितवान् । राज्ञः कथनं समग्रं श्रुत्वा गुरुः उक्तवान् - ''एवं चेत् राज्यं परित्यजतु'' इति ।

राजा - ''राज्यपरित्यागेन समस्यायाः परिहायः न भविष्यति । सर्वं विपर्यस्तं भवेत् । अराजकता अपि उत्पन्ना भवेत् ।''

गुरुः - ''अथवा स्वपुत्राय राज्यं समर्पयतु । भवान् अरण्यम् आगच्छतु । मया सह निवसतु । भगवतः ध्यानं करोतु ।''

राजा - ''किन्तु मम पुत्रः बालः । सः राज्यभारस्य निर्वहणे असमर्थः ।''

गुरुः - ''तर्हि राज्यं मह्यम् एव ददातु । अहं राज्यपरिपालनव्यवस्थां करोमि ।''

राजा - ''अवश्यं ददामि ।''

गुरुः - ''तर्हि हस्तेन जलम् आनयतु । समग्रं राज्यं मह्यं दानरूपेण ददातु ।''

राजा - ''तथैव आचरामि ।'' (तथैव करोति) ''भवते राज्यं दत्तम् ।''

गुरुः - ''इदानीं भवान् कुत्र गच्छति ?''

राजा - ''धनकोषतः किञ्चित् धनं स्वीकरोमि । अन्यदेशं गच्छामि । तत्र वाणिज्यं करिष्यामि ।''

गुरुः - ''भवान् राज्यं मह्यं दत्तवान् किल ? तदा कोषः अपि मम एव । भवान् धनं कथं स्वीकर्तुं शक्नोति ?''

राजा - ''क्षम्यताम्, पुनः राज्यं न प्रविशामि ।''

गुरुः - ''तर्हि किं करोति भवान् ?''

राजा - ''कुत्रापि गत्वा उद्योगं सम्पादयामि ।''

गुरुः - ''उद्योगं कर्तुम् इच्छति किल ? मम इदानीं विशालं राज्यम् अस्ति । संन्यासी अहं व्यवस्थां कर्तुम् असमर्थः । मम एकः समर्थः सहायकः अपेक्षितः । भवान् एव मम सहायकः भवतु । भवान् साहाय्यं कर्तुं शक्नोति वा ?''

राजा - ''अवश्यं करोमि ।''

गुरुः - ''तर्हि इतः आरभ्य भवान् मम सहायकः । राज्यं गच्छतु । शासनं करोतु । किन्तु तत्र भवतः किमपि नास्ति । लाभः, हानिः, कष्टं, सुखं, सर्वं मम एव । भवते वेतनं दास्यामि ।''

राजा पुनः राज्यं गतवान् । कार्ये निरतः अभूत् । मासद्वयम् अतीतम् । एकदा गुरुः आगतवान् । राजानं पृष्टवान् - ''राज्यव्यवस्था कथम् अस्ति ? जीवनं कष्टकरं प्रतिभाति वा ?'' इति ।

''नैव, इदानीं मम किम् अस्ति ? अहं केवलं सेवकः । श्रद्धया परिश्रमेण च अहोरात्रं कार्यं करोमि । तथापि चिन्ता नास्ति'' इति उक्तवान् राजा ।

''भ्रातः ! एषः एव योगः । 'इदं न मम' इति भावेन कार्यं करणीयम् । तेन कष्टशतम् अपि सोढुं शक्ताः भवामः'' इति उक्तवान् गुरुः ।

●